पणमिर-पणइ-पणामिअ-दिट्ठि, सोतरथ अल्लिविअ-हासो,
अणचच्छुप्पिअ-हिअओ अप्पिअ-निव-खोहम् आसीणो. २७
जाविअ मुहुत्तम् गगं, पुरोहिओ जविअ-दुट्ठ-कलि-ललिओ,
दन्त-रुई-ओम्बालिअ-गयणो उच्चारही मन्तं. २८

उम्बालिअ। उत्थङ्घिअ। गुलुगुच्छिअ। उप्पेलिअ। उन्नामिअ। "उन्नमेरुत्थङ्घोल्लाल-गुलुगुञ्छोप्पेलाः" [३६] ॥

पेण्डविरो। पट्ठविआइं। पट्ठाविआइं। "प्रस्थापेः पट्ठव-पेण्डवौ" [३७] ॥

वोकन्त। अवुकन्त। विण्णति। "विज्ञपेर्वोक्कावुक्कौ" [३८] ॥

२७. प्रणम्रप्रणतो सेवार्थसमागमवन्दारुसकलभूपालकृतपादप्रणामेषु प्रणयिषु प्रह्वपार्थकलोकेषु वा अर्पिता प्रसन्नतासूचनाय मनाग् न्यस्ता दृष्टिः चक्षुर्विन्यासो येन स तथा। अर्पितहर्षः स्वदर्शनप्रदानसंपादितसभाजनसंतोषः। अनर्पितहृदयः गम्भीरत्वाद् अनवतीर्णस्वाभिप्रायः स कुमारपालावनिपः। अर्पितनृपक्षोभं किम् एषोऽधुना नो विधास्यतीति उत्पादितप्रत्यर्थिनृपतितनोविसंभ्रमं यथा भवती एवं तत्र कनकमण्डपिकायाम् आसीनः। उपविष्टः ॥

पणामिअ। अल्लिविअ। अणचच्छुप्पिअ। अप्पिअ। "अर्पेरल्लिव-चच्चुप्प-पणामाः" [३९] ॥

२८. एकं मुहूर्तं यापयित्वा उपवेशानन्तरं स्वावसरप्राप्त्यर्थं नृपस्य सावधानार्थं च क्षणमात्रं प्रतीक्ष्य यापितं स्वमहिम्ना गमितं दुष्टस्य लोकदुःखदायित्वाद् अप्रियस्य कलेः कलिकालस्य ललितं विलासो येन स तथा। दन्तरुचिभिः शशधरकरकल्पदशनरश्मिभिः प्लावितं व्याप्तं गगनं येन स तथा। पुरोहितः पृथ्वीशश्रेयोर्थं मन्त्रम् उदचारीद् अभणत् ॥

जाविअ। जविअ। "यापेर्जवः" [४०] ॥

---

१ B उव्वा° C उम्बा°

हार-प्पह-पव्वालिअ-हिओ निवो, पाविओव्व अमाण,
पक्खोडिअ-चमराहिं विकोसिअच्छीहि उवसरिओ. २९
ओग्गालिर-वसहाणं, वग्गोलिर-करहयाण, वारम्मि
रोमन्थ-भङ्ग-जणणो अहासि गम्भीर-तूर-रवो. ३०
णुव्वन्तो सिरि-णिहुवय-सिरिम्, उम-कामय-सिरिं पयासन्तो,
विच्छोलिअ-भुमयाहिं राया विलयाहि परिअरिओ. ३१

२९. हाराणां नानाविधमुक्ताकलापानां प्रभाभिः प्लावितं हृदयं वृक्षःस्थलं यस्य स तथा। अतः उत्प्रेक्ष्यते। अमृतेन प्लावित इव व्याप्त इव। विकोशितानि वारंवारं चालनेन स्फारीकृतानि चामराणि याभिस्तास्तथा ताभिः। विकोशिताक्षीभिः विकसितनेत्राभिः नृपः उपसृतः। चामरव्यग्रकरवनिताभिः शोभार्थं पार्श्वतः सेवित इत्यर्थः॥

ओम्वालिअ। पव्वालिअ। पाविओ। "प्लावेरोम्वाल-पव्वालौ" [४१.]॥

पक्खोडिअ। विकोसिअ। "विकोशेः पक्खोडः" [४२.]॥

३०. रोमन्थं कुर्वन्ति "णिज् बहुलं नाम्नः°" [हे० ३.४] इति णिजि रोमन्थयन्ति इत्येवंशीला रोमन्थयितारः उद्गारी चर्वणकारिणश्च ये वृषभा बलीवर्दास्तेषां रोमन्थयितृकरभाणां च वारे समूहे। रोमन्थयनं भावे घञि रोमन्थस्तस्य भङ्गः चलितदंसवलितताद्दशवाद्यश्रवणेन संजातक्षोभत्वात् विच्छेदस्तस्य जनकस्तूर्यरवो नान्दीनिनादः। अथ स्वर्णमण्डपिकायां सिंहासनोपविष्टे नृपे पुरोहितमन्त्रोच्चारेण चामरिकाचामरग्रहणानन्तरम् आसीत्॥

ओग्गालिर। वग्गोलिर। रोमन्थ। "रोमन्थेरोग्गाल-वग्गोलौ" [४३.]॥

३१. श्रियं कामयते "शीलिकामि°" [हे० ५.१] इति णे श्रीकामः स एव

१ B° भुमयाए. WE WITH C.

1 B उपाश्रितः. WE WITH C. 2 B रोमेणयसे. WE WITH C. 3 B स च FOR स एव.

अणकम्पिर-कर-वलिअ-थाले ओआविउं अंदोलिर-सिहं
रङ्खोलिर-ताडङ्क वर-विलयारत्तिअं काही. ३२

जण-रसुणेहि णाविउम् उव्वीसं तस्स पणसिर-निवेहि
परिवाडिअञ्जलीहिं व्व घडिआ कमल-कोसव्व. ३३

श्रीकामकस्तस्य श्रियं प्रकाशयन् उमाकामकश्रियं प्रकाशयन् । संपत्त्यापि स्वविभूत्या माधवपार्वतीपतिलक्ष्मीं प्रकटयन्नित्यर्थः । कमिता अभीष्टकामिनाम् अर्थार्थनिरीक्षणार्थं चालिता भुवो यकाभिस्तास्तथा ताभिर्वनिताभि राजा कुमारपालनृपः । परिवृतः स्वस्य कृत्यकरणाय उपसृतः ॥

णिहुवय । कामय । "कमेर्णिहुवः" [४४]॥ णुवन्तो । पयासन्तो । "प्रकाशेर्णुवः" [४५]॥

३२. अकम्प्रौ अकम्पनशीलौ । निश्चलावित्यर्थः । यौ करौ हस्तौ तयोरारोपितं धृतं यत् स्थालं रत्नखचितकाञ्चनपात्रं तस्मिन् आरोप्य संस्थाप्य आरात्रिकं नीराजनाय दीपकमण्डलम् । न दोलयतीति ग्रहादिभ्यो णिनि अदोलिनी स्थिरा शिखा कलिका यस्य तत्तथा तद् दोलिनौ लीलावशात् चलनशीलौ ताडङ्कौ कुण्डले यस्याः सा तथा । वरवनिता वारविलासिनी अकार्षीत् । उदतारयदित्यर्थः ॥

विच्छोलीअ । अणकम्पीर । "कम्पेर्विच्छोलः" [४६]॥

वलिअ । आरोविउं । "आरोपेर्वलः" [४७]॥ अदोलि । रङ्खोलिर । "दोले रङ्खोलः" [४८]॥

३४. जनरत्नैः नीतिशालितया लोकावर्जकैः प्रणमन्नृपैः घटिताञ्जलिभिः योजितैः करसंपुटैः कृत्वा तस्यां कनकमण्डपिकायां नृपं कुमारपालनृपनामानं रञ्जयितुम् आत्मनि सानुरागं कर्तुं स्वे शीर्षो-परिष्टात् कमलकोशा इव कमलकुड्मलानीव घटिता विरचिताः ॥

रसुणेहि । णाविउं । "रञ्जे रावः" [४९]॥

परिवाडिअ । घडिआ । "घटेः परिवाडः" [५०]॥

---

आरात्रिकं. २ B वरंवनित्य. C वरवनिता.

कणय-परिआलिएहिं रयणाहरणेहिं वेढिअङ्गुलिआ
विकिणेण-किणणे-छइल्ला पुरो निविट्ठा महाजणिआ. ३४
विक्केन्तोध्दरिआ इव भायन्ता अवि अबीहिरा निच्चं
भीएहि सहचरेहिं निव-दूआ दूरम् अच्छीणा. ३५

३४. कनकेन वेष्टितैर्निर्मितैः रत्नाभरणैर्मरकतपद्मरागादिमुद्रिकाभिः कृत्वा वेष्टिताङ्गुलयः न्यासनाम्नि काञ्चनमुद्रिकाः। विक्रयण-क्रयणयोश्छेकाः महार्घप्रवाल मौक्तिकमणिरत्नादिवस्तुनो मूल्येन प्रदानोपादानयोर्विचक्षणा महाजनिकाः श्रेष्ठिसार्थवाहप्रमुखाः पौरलोकाः पुरः युष्मत्प्रसादाद् वयं सुखिन इत्यादि निजवार्त्ताप्रतिपादनार्थं राज्ञोऽग्रे निविष्टा आसीनाः॥

परिआलिएहि। वेढिअ। "वेष्टेः परिआलः" [५१.]॥

३५. नृपदूताः अस्यापि पृथ्वीशस्य देशान्तरहारिणो भीता अपि प्रतापपराभूततपनमण्डलं श्रीकुमारपालं भूपालं कृतनयप्रश्रयं संभावनादीनात् चकिता अपि अभीताः स्वप्रभुसामर्थ्यचिन्तनात् सावष्टम्भा भीतैः सहचरैः सभादर्शनादेव क्षुब्धैः स्वानुचरैः सह दूरम् आसीनाः। प्रस्तावे सति संदेशकं विज्ञपयिष्याम इति सभायां दूरदेशे स्थिताः। एवंविधाः सन्तो विज्ञायन्ते विक्रीणदुध्दरिता इव विक्रीणस्तु सत्सु उध्दरिताः केनापि अगृहीतास्त इव। यत् किल विक्रीणतान् उध्दरति तत् पृथग् भवति॥

विक्किणण। किणण। विक्केन्तो। "क्रियः किणो वेस्तु क्के च" [५२.] इति क्रीणातेः किणो वा वेः परस्य तु द्विरुक्तः क्के। चकारात् किणश्च। गेरिति निवृत्तम्॥

भायन्ता। अबीहिरा। "भियो भा-बीहौ" [५३.]॥ बाहुलकात् क्वचिन्न। भिएहि।

अच्छीणा। "आलीङोऽल्ली" [५४.]॥

---

१ B C विक्किणिणं° २ B C विक्केतो°

---

1 C विक्रयक्रयण° 2 B °मंडनं° 3 B एव. 4 B C विक्किणिण. 5 B C किणिण. 6 B C विक्केन्तो. 7 B C णे इति. 8 B C भाअंता.

भत्ति-णिरिग्घिअ-हिअआ मउलि-णिलीअन्त-पाणि-संपुडया
निव-पय-कमले-निलुक्कन्त-लोअणा सा सहा आसि. ३६

आसि मणि-वेइआसु लुक्कन्तो, मणि-महीहिं लिक्कन्तो,
ल्हिक्कन्तो मणि-थम्भेसु सय-गुणो पडिकिदीइ जणो. ३७

निवइ-नीलीइर-नयणा, अविराय-सिरी, विलीइर-जुआणा
अलि-रुञ्झिअ-जङ्घ-रुण्टिअ-किङ्किणि-नीवीउ आसीणा. ३८

३६. भक्तौ नृपाराधने निलीनम् आसक्तं हृदयं यस्याः सा तथा। मौलौ मस्तके निलीयमानम् आश्लिष्यत् पाणिसंपुटं यस्याः सा तथा। राजानम् उद्दिश्य योजितहस्तेत्यर्थः। नृपपदकमले निलीयमानलोचना संश्लिष्यन्नयना सा सर्वोत्कृष्टा सभा आसीत्। अपरव्यापारं परित्यज्य सेवैकताना संवृत्तेति भावः॥

३७. मणिवेदिकासु रत्ननिर्मितवितर्दिषु निलीयमानः। मणिमह्यां निलीयमानः मणिस्तम्भेषु च निलीयमानः। प्रतिकृत्या प्रतिबिम्बेन तत्रतत्र संक्रामन् शतगुणः प्रभूतो जनः आसीत् संपन्नः॥

३८. नृपतौ निलेतुं मज्जनशीलम्। वीक्षणपरम् इति यावत्। नयनं यासां तास्तथा। अविलीनश्रियः अभ्रष्टशरीरशोभाः विलेतारः धैर्यध्वंसाद् द्रवणशीला युवानो यकाभ्यस्तास्तथा। अलिरुत जघितं यासां तास्तथा रणन्त्यः किङ्किण्यः क्षुद्रघण्टिका यासु तथाभूता नीवयो यासां तास्तथा नार्यः आसीनाः। आशीरादि कृत्वा वारवनिताः कुमारपालनृपपार्श्वे उपविष्टाः॥

णिरिग्घिअ। णिलिअन्त। णिलुक्कन्त। लुक्कन्तो। लिक्कन्तो। ल्हिक्कन्तो। निलीइर। "निलीङे-णिलीअ-णिलुक्क-णिरिग्घ-लुक्क-लिक्क-ल्हिक्काः" [५५.]॥

अविराय। विलीइर। "विलीङे-र्विरा" [५६.]॥

रुञ्झिअ। रुण्टिअ। "रुके रुञ्झ-रुण्टौ" [५७.]॥

---

१ BC°या. २ BC°ल्हि° ३ BC°रुंझिअ°

---

१ BC°रत्ति°

सग्गेवि हणिअ-बिदधा, असुणिअ-दोसा, तिलोअ-सिरि-धुवणी,
कुमर-नरिन्द-सहा सा धुणि आरि-मणोरहा हुआ. ३९
हुत्तानन्दो, अहुवन्त-संसओ, निवइम् उव्वुअन्त-मई
पहुवन्तो अपरिहवो विण्णविही संधिविग्गहिओ. ४०
"देव, वीवरवी हुन्तो निवडिअ-वलेण सो पहुणन्तो
हूओ कुडुण-नाहो जह तह कुणसु अवहाणं. ४१

३९. स्वर्गेपि। आस्तां मर्त्यलोके। श्रुतविभवा विख्यातसमृद्धिः अश्रुतदोषा स्वपरदेशानाकर्णितास्थितिः। त्रैलोक्यश्रीधूयते स्ववैभवेन अभिभूयते अनयेति करणे अनीटि त्रैलोक्यश्रीधवनी सा अग्र्या-वर्णितस्वरूपा "से लुग् वा" [हे० ३.२] इति कुमारपालेत्यत्र उत्तरपदलोपे कुमारः। स चासौ नरेन्द्रश्च तस्य सभा धुतारिमनोरथा विध्वगवरिमनपास्तनि-सिंहनादादिकप्रचक्राद्याकलितानेकसुभट विसंकटत्वात् परास्तअत्य-र्थिसार्थविरूपकाभिप्राया भूता संजाता ॥

हणिअ। असुणिअ। "श्रुटेर्हणः" [५८.]॥

धुवणी। धुणिअ। "धूगेर्धुवः" [५९.]॥

४०. भवदानन्दः नृपाग्रतोऽभिप्रेतनिवेदनात् संपद्यमानप्रमोदः। अभवत्संशयः विज्ञातस्वपरसैन्यवृत्तान्तत्वाद् अविद्यमानछन्नपाद्य-विषयसंदेहः। उद्भवन्मतिः सपतिभत्वाद् उल्लसद्बुद्धिः। प्रभवन् स्व-स्वनचातुर्येण इतरविज्ञापकेभ्यः समर्थः संजायमानः। अपरिभवः कुत्रापि असंपन्नतिरस्कारः। संधिविग्रहिकः संधानविग्रहविनियुक्त-प्रधानपुरुषः व्यजिज्ञपत्। वक्ष्यमाणं न्यवीविदत् ॥

हुआ। होन्त। अहुवन्त। अपरिहवो। "भुवेर्हो-हुव-हुवाः" [६०.]॥ क्वचिद् अन्यदपि। उव्वुअन्त ॥

४१. विज्ञप्तीकामेव गाथाषट्कत्या आह। हे देव महाराज

---

1 BC अ° THOUGH BOTH HAVE उ° IN THE TEXT

दूर-ट्ठिआहि कारिउं णिआरिअं सुर-वहूहि दीसन्ता,
संदाणन्ता, अइ-निद्दुहावणा वेरि-सुहडाण; ४२
वावम्फिरा कलासुं, अमोघ-णिव्वोलणं पयासन्ता,
अपयल्लिर-असि-फलया, णीलुञ्छन्ता रिउ-दलम्मि; ४३

पृथग्भूतम् इतरेभ्योऽशेषसैन्यतो विशिष्टं स्पष्टभूतं सर्वत्र प्रकटं वा यद् बलं चतुरङ्गसैन्यं तेन कृत्वा विषयीभवन् बलावलेपेन संपद्यमानः प्रभवन् शत्रुतिरस्कारेण समर्थः संजायमानः स लोकविख्यातः कुङ्कुणानां नाथः कुङ्कुणदेशाधीशः यथा यादृशो भूतः संपन्नस्तथा अवधानं कुरु। तद्वृत्तान्त निशमनपरो भवेति भावः॥

हुन्तो। "अविति हुः" [६१.]॥

[ णिव्वडिअ। "पृथक्स्पष्टे णिव्वडः" [६२.]॥

पहुप्पन्तो। "प्रभौ हुप्पो वा" [६३]॥ पक्षे पहवन्तो॥

हूओ। "क्ते हूः" [६४]॥

४२. षड्भिः कुलकम्। हे महाराज तव योधाः कुङ्कुणं यासाः। कीदृशाः। कोणक्षितकृतम् अर्धाक्षिनिरीक्षणकरणं कृत्वा दूरस्थिताभिः गगनाङ्गणगताभिः सुरवधूभिः अप्सरोभिर्दृश्यमानाः एते रणाजिरे वैरिभिरदृष्टपृष्ठा[2] वैकुण्ठस्वर्गम् अस्माकं नः पतयो भविष्यन्तीति सस्पृहं विलोक्यमाना अवष्टम्भं कुर्वन्तः स्थिरधैर्यम् आदधाना वैरिसुभटानां च अतिविह्वलकरणाः "बहुलम् एतन्निदर्शनम्" इति चुरादिवचनाद् रामो राज्यम् अकारयद् इतिवत् स्वार्थे णिचि निर्वेदता-जनकाः॥

४३. कलासु शस्त्रादिशिक्षासु श्रमं कारिणवः अभ्यासे विधातारः। अमोघं वैरिविजयेन सफलं मन्युना ओष्ठमालिन्यकरणं तत् प्रकाशयन्तः दर्शयन्तः। अशिथिलिमवलम् अलम्बनं च कारिणवः। स्वयत्नग्रहणात् निश्चलाः सुस्थानस्थाश्चर्माणः। एवंभूता असयश्च

1 BC पाठन्त FOR °ओलो. 2 D0 मेवं०.

कम्मन्तमत्ते-मन्निअ-रिउणो, गुरुलन्त-सामिणो विजये,
दाउं वसुम् अम्हरन्ता, पहु-आदेसं च झूरन्ता; ४४
जुज्झेण भरोवन्ता राम-कहं, भारहं भलावन्ता,
निअ-कुल-कमं लढन्ता, सुमरन्ता खत्तिआचारं; ४५
वीर-वरणं सरन्ता, पयरन्ता सामिणो पसायं च,
बावण्ण-वीर-कह-विम्हरावणा, वइर-पम्हुहणा; ४६

फलकाः खेटकाश्च येषां ते तथा। ढल इति देश्यः खेटार्थे। रिपु-सैन्ये निःपतनम् आच्छोटनं वा कुर्वन्तः ॥

४४. क्षुरं कुर्वाणा एव क्षुरकुर्वाणमानिनः। अत्र च क्षुरशब्देन क्षुरविधेयं शिरस्तुण्डमुण्डनादि कर्मोच्यते। अतो नापितमात्राणि मनिता रिपवो यैस्ते तथा। स्वामिनः स्वप्रभोर्विजये विजयनिमित्तं स्वकुलदेवतादि प्रति चाटु कुर्वाणाः। वसु विभूतिं दत्वा वर्णनापर-वन्दिजनाय वितीर्य अस्मरन्तः दानशौण्डत्वाद् अजानानाः प्रभ्वा-देशं स्वामिदत्तशिक्षां च स्मरन्तः मनसि धारयन्तः ॥

४५. युद्धेन साहससंग्रामेण कृत्वा रामकथां रामरावणयुद्धवृ-त्तान्तं स्मरयन्तो ज्ञापयन्तः। भारतं च कौरवपाण्डवयुद्धप्रतिपाद-कग्रन्थविशेषम्। कौरवपाण्डवयुद्धमित्यर्थः। स्मरयन्तः निजकुल-क्रमं रणाङ्गणभङ्गपराङ्मुखत्वपूर्वपुरुषसमाचारं स्मरन्तः। क्षत्रिया-चारं नष्टपृष्ठानुसरणपतितप्रहारपरिहाररूपं वीरव्रतं स्मरन्तः ॥

४६. वीरवरणम् अनेन सह मया योद्धव्यमिति प्राकृतप्रतिसु-भटयुद्धाङ्गीकारं स्मरन्तः अवबुध्यमानाः स्वामिनः प्रसादं च स्मर-न्तः। द्विपञ्चाशद्वीरकथायाः शूद्रकादिवीरचरित्रस्य विस्मरणाः तत्कथां विस्मरन्तो लोकान् प्रयुञ्जानाः। वैरस्य स्मरणाः रिपुभिः सह अस्मत्तु विरोध इति स्मर्तारः ॥

---

१ B° मंतः C° मितः २ B सराः ३ BC शूद्रकावीरादिचरि°

पम्हुसिअ-अन्न-कज्जा, विम्हारिअ-दाणविन्द-थल-खलिआ,
वीसारिअ-रिउ-मन्ता, तुह जोहा कुक्कुणं पत्ता. ४७
सीह-रव-पोक्कणा ते, कोकन्ता किंपि सद्द-वाहरणा,
ठेल्वे खिर-तुरय-पयक्खि रेभ-चडिआ, पसरिआ अ. ४८

४७. विस्मृतान्यकार्याः । रणरसिकतया त्यक्तापरप्रयोजना इति भावः । विस्मारितं निजानुपमपराक्रमेण लोकानां स्मृतिपथम् अवतरत् निखिलं दानवेन्द्रबलस्य सुग्रीवशौण्डीर्यस्य स्खलितं स्फूर्तिर्यैस्ते तथा । विस्मारितः विस्मरन् स्मृतिपथाद् उत्तरन् प्रयुक्तः रिपुमन्त्रः अस्माभिरेवमेवं योद्धव्यम् इत्यादिरात्मपर्यालोचो यैस्ते तथा । अस्मदीयानां प्रतिभटानां सर्वं युद्धकरणं विस्मृतम् इति भावः ॥

कुणसु । कविउं । "कृगेः कुणः" [६५.] । कृगेरित्यधिकारः उत्तरसूत्राष्टके ज्ञेयः ॥

णिआरिअं । "काणेक्षिते णिआरः" [६६.] ॥

संदाणन्ता । अइनिंहुहावणा । "निष्टम्भावष्टम्भे णिट्ठुह-संदाणं" [६७.] ॥

वावम्फिरा । "श्रमे वावम्फः" [६८.] ॥

णिव्वोलणं । "मन्युनौष्ठमालिन्ये णिव्वोलः" [६९.] ॥

उपफखिर । "शैथिल्यलम्बने पयल्लः" [७०.] ॥

णीलुञ्छन्ता । "निष्पाताच्छोटे णीलुञ्छः" [७१.] ॥

कम्मन्त । "क्षुरे कम्मः" [७२.] ॥

गुललन्त । "चाटौ गुललः" [७३.] ॥

झूरन्ता । झूरन्ता । भरावन्ता । भलावन्ता । लढन्ता । सुमरन्ता । सरन्ता । पयरन्ता । विम्हरावन्ता । पम्हुहणा । "स्मरेर्झर-झूर-भर-भल-लढ-विम्हर-सुमर-पयर-पम्हुहाः" [७४.] ॥

पम्हुसिअ । विम्हारिअ । वीसारिअ । "विस्मुः पम्हुस-विम्हर-वीसराः" [७५.] ॥

४८. सिंहरवस्य व्याहरणाः प्रतिभटान् प्रति सिंहनादान् मु-

---

१ B C उक्खिलि°

---

1 So BC BOTH HERE AND IN THE TEXT  2 BC णिव्वोलं.

अह मढमढन्त-णीहरिअ-मद-जले सिन्धुरम्मि चडिऊण
ठाणाओं नीलिओ कुडुणाहिवो नीसरन्त-बलो॥ ४९
वरहाडिआ गढाओ रण-धाडिअ-रक्खणा भडा तस्स,
जग्गिअ-खग्गा रण-जागरा य आअड्डिआ तत्तो॥ ५०

जल्पन्तः। किम् अपरे मृता इदानीम् इत्यादि व्याहरन्तो जल्पन्तः। सत्यव्याहरणाः स्ववचनप्रतिपन्नार्थनिर्वाहकत्वाद् अवितथभाषकाः। अभूत्वराः सत्वरं गमनशीला ये तुरंगमाः अश्ववराश्च यद्भाः कुञ्ज-रास्तेषु आरूढाः स्थिताः। प्रसृताः परबलमनु प्रचलिताश्च॥

पोक्कणा कोक्कन्ता। व्याहरणा। "व्याहृगेः कोक्क-पोक्को" [७६.]॥

उवेक्खिर। पयल्लिर। पसरिआ। "प्रसरेः पयल्लोवेल्लो" [७७]॥

४९. अथ क्षुभ्यद्योधप्रसरणानन्तरं प्रसरन्नं निःसृतं गण्डा-दिस्थानसप्रकाद् निर्गतं मदजलं यस्य स तथा तस्मिन् सिंधुरे कु-ञ्जरे आरुह्य स्थानात् स्वपत्तनमध्याद् निःसरत् प्रसृतो निर्गच्छद् बलं सैन्यं यस्य स तथा कुडुणाधिपो मल्लिकार्जुनाख्यनृपः निःसृतः॥

मढमढन्त। "मढमढो गन्धे" [७८.]॥

५०. गढेति देश्यो दुर्गे। तस्माद् निःसृताः। रणाजिः मृतानां का-तरसत्य संग्रामाङ्गणाभिगतानां रक्षणाः तद्यायालपरापरसुभरनिवार-कत्वेन त्रायकाः। जागरिताः शत्रुप्रहाराय कोशेभ्यो निःकाशिता इत्यर्थः। खड्गा यैस्ते तथा। जागर्तीत्यचि जागराः रणाय जागराः सावधानाश्च तस्य कुडुणाधीशस्य भटास्ततः दुर्गनिर्गमानन्तरं आ-कृष्टाः परस्परं युद्धाय प्रवृत्ताः॥

णीहरिअ[3]। नीलिओ। नीसरन्त। वरहाडिआ। धाडिअ। "निःसरेर्णीहर-नील-धाड-वरहाडाः" [७९.]॥

जग्गिअ। जागरा। "जाग्रेर्जग्गः" [८०]॥

---

1 C सृ॰ B DOUBTFUL BETWEEN सृ॰ AND मृ॰ 2 B C पयल्लोवेल्लो 3 B C णीहरिआ.

समरम्मि वावरन्ता, साहट्टिअ-पर-बला, असंवरिआ,
अणसाहरिअ-पेम्मा मरीहि सन्नामिआ वरिउं. ५१
आदरिअ-वीर-वरणा, सारन्ते पहरिउं पयट्टा य,
अणओहिअ-भड-माणा, ओरसिआ इव सिवस्स गणा. ५२
ओअरिअ दीहिआओ अचयन्ती कय-नरन्त-सुहडेहिं
तीरन्ताण वि पारन्तएहिं तेहिं कयं जुज्झं. ५३

५१. समरे व्याप्रियमाणाः प्रवर्तमानाः संवृतं युगपद् अभिमु-खप्रवृत्तत्वेन भयजननात् पिण्डीकृतं परबलं यैस्ते तथा। असंवृताः भयाभावाद् यथेच्छं विचरिताः। असंवृतम् उच्छृङ्खलं प्रेम यासां ताः असंवृतप्रेमाणस्ताश्च ता अमर्यश्च ताभिर्वरितुं वरणं कर्तुम् आ-हूताः अङ्गीकृताः॥

आउड्डिआ। वावरन्ता। "व्याप्रेरा अड्डः" [८१.]॥

साहट्टिअ। असंवरिआ। अणसाहरिअ। "संवृगेः साहर-साहट्टौ" [८२]॥

५२. आदृतवीरवरणाः। अनेन प्रबलवीरेण सह मया योद्ध-व्यम् इति कृतप्रतिज्ञा इत्यर्थः। अनवतीर्णः अभ्रष्टः भटमानः सुभ-टाभिमानो येषां ते तथा। प्रहरतः प्रहारान् ददतः प्रहर्तुं प्रवृत्ताः। एवं च मर्त्यासंभाव्यतथाविधयुद्धविधानाद् मन्यन्ते शिवस्य गणा इव अवतीर्णाः स्वर्गलोकाद् आयाताः॥

सन्नामिआ। आदरिअ। "आदृगेः सन्नामः" [८३.]॥

सारन्ते। पहरिउं। "प्रहृगेः सारः" [८४.]॥

५३. अशक्नुवत्कृताः असमर्थीकृताः शक्नुवत्सुभटा यैस्ते तथा तैः शक्नुवतामपि मध्ये शक्नुवद्भिस्तैः कुङ्कुमाभिषभरैः दीर्घिकातः

सक्कन्तो, अणथक्किअ-सलहिअ-सर-वरिसणो निवो ताण
मणि-खचिअ-कणय-वेअडिअ-माढिओ पहरिउं लग्गो. ५४
दिन्नम् असोढिअ-मंसासणाण अणपउलिअं तओ मंसं
अरि-पउण-पयावेणं तेणं सर-मिल्लिरेण रणे. ५५

अवतीर्य युद्धं कृतम् । समरतूर्यनिर्घोषश्रवणप्रवृद्धोत्साहत्वेन तदैव स्नानाद्यपहाय संग्रामः प्रारब्ध इति भावः ॥

अणओइअ । ओरसिआ । ओअरिअ । "अवतरेरोह-ओरसौ" [८५.]॥

५४. शक्नुवन् इतरसुभटापेक्षया समर्थः । अर्फाकितम् अनीचै-गीतम् । सर्वोत्कृष्टमित्यर्थः । अत एव श्लाघितं शरवर्षणं यस्य स तथा । मणिभिः खचितः कनकेन खचितो माढी यस्य स तथा । म-णिस्वर्णनिर्मितसंनाह इत्यर्थः । [नृपः] ताण इति द्वितीयायाः षष्ठी [३.१३४] इति तान् गूर्जरसुभटान् प्रहर्तुं लग्नः ॥

अचयन्तीकय । तरन्त । तीरन्ताण । पारन्तएहिं । सक्कन्तो । "शकेश्चय-तर-तीर-पाराः" [८६.]॥

अणथक्किअ । "फक्कस्थक्कः" [८७.]॥

सलहिअ । "श्लाघः सलहः" [८८.]॥

खचिअ । वेअडिअ । "खचेर्वेअडः" [८९]॥

५५. अरीणां पचनो दाहकः प्रतापो यस्य स तथा तेन शरमो-क्षणशीलेन रणे तेन नृपेन अपक्वमांसस्य अशनानां भक्षकाणां गृ-ध्रादीनाम् अपक्वं मांसं ततः शरमोक्षणानन्तरं दत्तम् । अनेके सुभ-टास्तेन व्यापादिताः सन्तो गृध्रादिभक्षा अभूवन्निति भावः ॥

असोढिअ । अणपउलिअं । पउण । "पचेः सोल्ल-पउलौ" [९०.]॥

---

1 B सत्सतूर्यनिघो॰ C समतूर्यनिर्घो॰ 2 B C माढिए॰ 3 B C ॰पउल्लो. WE WITH A.

उस्सिक्किअ-सङ्केणं, पच्छा अवहेडिउं निअंपि दलं
अणच्छुडिअ-कुल-धम्मं सीह-झुणी तेण रेअविओ. ५६
णिल्लुञ्छिअ-भय-पसरो, धंसाडिअ-भयम् इभं समारूढो,
मुञ्चन्तो बाणे, णिच्छल्लीअ सो कोह-दुहिअप्पा. ५७
जूरवणेहि उमच्छन्तेसु जय-सिरि-अवच्छिओ समरे,
नाह, अवेहविरेहिं पाइक्केहिं न वेल्लविओ; ५८

५६. मुक्तशङ्केन अवगणितपरपक्षभयेन तेन नृपेण अमुक्तकुल-धर्मम् अत्यक्तक्षात्रियाचारं निजमपि । दलेति देश्यः सैन्ये । तत् प-श्चाद् मुक्त्वा । अतिवीर्यात् स्वबलस्य अग्रे भूत्वेत्यर्थः । सिंहध्व-निर्मुक्तः । अयम् अहं युष्माकं कृतान्त इह आगत इति अस्मद्-लस्य निकटीभूय रणे जगर्जेत्यर्थः ॥

५७. मुक्तभयप्रसरः मुक्तभयं तथा विधानेकाङ्कपातेपि निर्भिकम् इभं समारूढः क्रोधदुःखितात्मा रोमाग्निसंतप्तगात्रः स नृपः बाणान् मुञ्चन् दुःखम् अमुञ्चत् ॥

मिसिरेण । उस्सिक्किअ । अवहेडिउं । अणच्छुडिअ । रेअविओ । णिल्लुञ्छिअ । धंसाडिअ । मुञ्चन्तो । "मुचेश्छड्डावहेड-मेल्लोस्सिक्क-रेअव-णिल्लुञ्छ-धंसाडाः" [११.] ॥
णिच्छल्लीअ । "दुःखे णिव्वलः" [१२.] ॥

५८. त्रिभिर्विशेषकम् । हे नाथ कुमारपाल नृप युद्धाधीशाः रचितव्यूहे विहितरचनाविशेषे गूर्जरसैन्ये प्रदेशम् अरचयत् । प्र-तिभट परासनेन आत्मसैन्यस्य अवकाशं चकारेत्यर्थः । तथा निजां यशोलक्ष्मीं समारचयत् । कीदृशाः । शत्रुषु विप्रतारकेषु वञ्चकैः । अतिच्छलयुद्धकुशलैरित्यर्थः । तैः सह समरे सति जयश्रिया अव

---

१ B निलुञ्छिअ. C निलुञ्छिअ. २ C णिव्व° ३ C पायक्के°

---

1 C ADDS सन्. 2 B निलुंछिअ. C निलुञ्छिअ 3 BC णिच्छल्लीय. 4 BC णिव्वलः. 5 So BC, AND NOT रचेशम्.

उग्गाहिअ-जय-पइन्नो-अवहिअ-वूहम्मि गुज्जर-दलम्मि
विडविड्डिअ पाणं तक्कालं रइअ-रोमञ्चो; ५९
सारविए रण-छेत्ते उवहत्थिअ-आउहेहिँ जुज्झन्तो
केलाइ आउहो सो निअे समारिअ जस-लच्छि. ६०
पहु-कज्ज-समारचेणेण सिञ्चिओ तुह वलेण बाणेहिं
सीभर-सिम्पिअ-वसुहो मय-सेअणओ इभो तस्स. ६१

छितः। अवञ्चयितृभिः अवञ्चनाशीलैः पदातिभिः न वञ्चितः न विप्रलब्धः। छलयुद्धे प्रकटयुद्धे च अस्यैव जयोऽभूदित्यर्थः॥

५९. रचितजयप्रतिज्ञः कृतपरबलभङ्गाङ्गीकारः। तत्कालं युद्धावसरे रचितरोमाञ्चः विहितपुलकः

६०. रणक्षेत्रे समारचिते कण्टकपाषाणाद्यपनयनेन समीकृते समारचितायुधैः उत्तेजितास्त्रैः सह समारचितायुधो युध्यमानः संप्रहरन्॥

जूरवणेहि। उमच्छन्तेसुं। अवञ्चिओ। अवेहविरेहिं। वेलविओ। "वञ्चेर्वेहव-वेलव-जूरवोमच्छाः" [९३.]॥

उग्गाहिअ। अवहिअ। विडविड्डिअ। रइअ। "रचेरुग्गहावह-विडविड्डाः" [९४.]॥

६१. हे महाराज प्रभुकार्यसमारचनेन स्वामीकार्यविधायकेन तव बलेन बाणैः कृत्वा तस्य कुङ्कुणाधीशस्य शीकरैर्नासाप्रमुक्तपृषत्कैः सिक्ता वसुधा येन स तथा मदेन सप्तस्थानक्षरन्मदजलेन सेचकः भूतलस्य उक्षकः इभः सिक्तः। प्रोत इति भावः॥

सारविए। उवहत्थीअ। केलाइअ। समारिअ। समारचणेण[2]। "समारचेरुवहत्थ-सारव-समार-केलायाः" [९५]॥

सिञ्चिओ। सिम्पिअ। सेअणओ। "सिचेः सिञ्च-सिम्पौ" [९६.]॥

---

१ C° छत्ते. WE WITH B. २ BC समाचरणेण.

---

1 B ADDS सति. 2 BC समाचरणेण.

पडिसुहडे पुच्छन्ता, गज्जन्ता ढिक्कमाण-वसहव्व,
अह बुक्किआ तुह भडा कुङ्कुण-देसाहिवं दट्ठुं. ६२
अग्घिअ-वम्मा, छज्जिअ-सिरक्कया, मण्डलग्ग-सहिअ-करा,
रेहिअ-सेन्ना, रीरिअ-रणङ्गणा, राइआ ते अ. ६३
आउड्डिअ-रह-चक्के, खुप्पन्त-हयं, णिउड्डमाणेभं,
खुडुन्त-भडं, करि-रुहिर-मज्जणे ताण आसि रणं. ६४

६२. गर्जद्वृषभा इव सदर्पनिनदवृषेन्द्रा यथा गर्जन्तो निनादं कुर्वाणाः सन्तः प्रतिसुभटान् पृच्छन्तः अथ हस्तिनि शरवर्मान्तरे तव भटाः कुङ्कुणदेशाधिपं दृष्ट्वा अयमसाविहास्त इति विज्ञाय गर्जिताः हतोऽयं जितमस्माभिरित्यादि सदर्पं निनदिताः ॥

पुच्छन्ता । "पृच्छः पुच्छः" [९७] ॥

गज्जन्ता । बुक्किआ[1] । "गर्जेर्बुक्कः" [९८] ॥

ढिक्कमाण । "वृषे[2] ढिक्कः" [९९] ॥

६३. राजितवर्माणः प्रदीप्तसंनाहा राजितशिरस्काः शोभितशिरस्त्राणा मण्डलाग्रराजितकराः खड्गविभ्राजितहस्ता राजितं सैन्यं यैस्ते तथा राजितरणाङ्गणास्ते तव भटा राजिताश्च ॥

अग्घिअ । छज्जिअ । सहिअ । रेहिअ । रीरिअ । राइआ । "राजेरग्घ-छज्ज-सह-रीर-रेहाः" [१००] ॥

६४. मज्ज्यते अस्मिन् इति मज्जनं करिरुधिरं च तद् मज्जनं च[3] तस्मिन् । यावन्ति करिरुधिरे मज्ज्यते तावतीत्यर्थः । करिणां रुधिराणि तेषु मज्जने ब्रुडने सति वा । मग्नरथचक्रं ब्रुडितरथपादं मज्जद्धयं मज्जदिभं मज्जद्भटं रणं तेषां गूर्जरकुङ्कुणभटानाम् आसीत् जातम् ॥

---

१ C चुक्किआ. २ C सरिस्क०.

---

1 C चुक्किआ. 2 SO B C AND A TOO, THOUGH THE VṚTTI APPEARS TO CONSIDER वृषे AS THE READING. 3 B OM. तद् मज्जनं च.

आरोलिअ-सर-माला-वमालणो मल्लिअज्जुणो राय,
पुञ्जिअ-पहु-लज्जिर-गुज्जरेहि जीहाविओ तेहि. ६५
ओसुक्कन्तो तेअण-गिराहि सो खत्त-धम्म-लुहण-भडे
उग्घुसिअ-रोस-रोसाणि आसिणो केवि सिक्खविही. ६६
लुञ्छन्तो घम्म-ज्जरले कज्जल-पुञ्छिअ-सुहव्व तेण भडा
पर-तेअ-पुंसणेणं फुसिअ-जसा हक्किआ केवि. ६७

आउड्डिअ । खुप्पन्त । णिउड्डमाण । बुड्डुन्त । मज्जणे । "मज्जेराउड्ड-णिउड्ड-बुड्ड-खुप्पाः" [१०१.] ॥

६५. पुञ्जिता राशीकृता याः शरमालास्तासां पुञ्जको विस्तारकः मल्लिकार्जुनो राजा पुञ्जितो भयेवशात् पिण्डीभूता अत एव प्रभोः स्वस्वामीनो लज्जिताः कथं वयम् एवंविधा मुखं दर्शयिष्याम इति लज्जनशीला ये गूर्जरास्तैः लज्जितः कथम् एतैर्भृत्यमात्रैर्युद्धे इति लज्जमानः तैस्तथाभूतैर्लज्जितो लज्जां प्रापितः ॥

आरोलिआ । वमालणो । पुञ्जिअ । "पुञ्जेरारोल-वमालौ" [१०२.] ॥

लज्जिर । जीहाविओ । "लस्जेर्जीहः" [१०३.] ॥

६६. तेजन्त्यः अमर्षजनिका या गिरः उक्तयस्ताभिः रेरे क्षत्रिया मा पलायध्वम् इत्यादिवाग्भिः । संस्कृते सनम् अन्तरेण तुग्दिजादीनाम् अप्रयोग इति ओसुक्कन्तो इत्यस्य धात्वन्तरेण अर्थः कथ्यते । दीपयन् । यन्मते सनम् अन्तरेणापि प्रयोगस्तन्मते तेजमान इत्यपि भवति । स मल्लिकार्जुननृपो मृषाः उत्तेजिताः । रोस्वेति देश्यः । कुन्ता यैस्ते तथा । ते च मृष्टासयश्च ते तथा तान् क्षत्रधर्मार्जनभरान् क्षत्रियाचार निर्मलिकारक सुभटान् कानपि अशिक्षयत् शक्तैरताडयत् ॥

ओसुक्कन्तो । तेअण । "तिजेरोसुक्कः" [१०४.] ॥

६७. घर्मजलं स्वेदबिन्दून् मृजन्तः वस्त्रादिना उत्पुंसयन्तः ।

---

1 So B C. See next note. 2 BC om. °णिउड्ड° though they gave the example णिउड्डमाण. A gives it. 3 B O भराधशात्. 4 B om. पुञ्जिअ.

पहु-नाम-पुसणो धम्माहुलणो वेरि-नाम-मज्जणओ
तं सुरीअ गइन्दं गुज्जर-लोओ अवेमइओ. ६८

सूडिअ-सुहडो-सूरिअ-तुरंगमो, विरिअ-त्ताण-पसरो य,
सुसुमूरिअ-सिरत्ताणो, करञ्जिओ कुङ्कुणाहिवई. ६९

पविरञ्जिआतवत्तो, णीरञ्जिअ-विजय-वेजयन्तीओ
सो लूण-सीस-कमलो कओ तुहा भञ्जिअ-भडेहि. ७०

जेष्यन्त्यधुनास्मान् आमाविति विच्छायवदनत्वाद् उल्लेस्यन्ते। कज्ज-
लमृष्टमुखा इव अञ्जनलिप्तानना इव। मृष्टवस्त्रासः अपासित-
कीर्तयो भटाः परतेजोमार्जनेन शत्रुप्रतापविध्वंसकेन तेन मल्लिका-
र्जुननृपेण निषिद्धाः अग्रतो विचरन्तः सिंहनादेन निरस्ताः॥

६८. प्रभुनाम्नः अमार्जनः नाशकोऽपि संग्रामे सम्मुखीनत्वाद् अ-
नपुंसकः। प्रकटीकारक इत्यर्थः। धर्मामार्जनः सत्रधर्मनाशकः।
वैरिनाममार्जकः वैरिविनाशेन नाम्नोऽपि ध्वंसकः। अभग्नो गूर्ज-
रलोकः अस्मद्दलवीरजनः तं प्राग्व्यावर्णितस्वरूपं गजेन्द्रं मल्लिका-
र्जुननृपहस्तिनम् अभाङ्क्षीन् शस्त्रैरभैत्सीत्॥

लुहण। उग्घुसिअ। रोसाणिअ। लुञ्छन्ता। पुञ्छिअ। पुंसणेणं। फुसिअ।
अपुसणो। अहुलणो। मज्जणओ। "मृजेरुग्घुस-लुञ्छ-पुञ्छ-पुंस-फुस-पुस-लुह-
हुल-रोसाणाः" [१०५.]॥

६९. भग्नसुभटः रणाङ्गणनष्टपदातिवर्गो भग्नतुरंगः ध्वस्तरथो
भग्नत्राणप्रसरः खण्डितवारप्रपञ्चो भग्नशिरस्त्राणः लूनशिरस्कश्च
कुङ्कुणाधिपतिर्भग्नः शस्त्रैर्भिन्नः॥

७०. भग्नातपत्रः छिन्नच्छत्रो भग्नविजयवैजयन्तीकः छिन्नवि-
जयसुवार्तो ध्वंसीकृतपताकः स मल्लिकार्जुननृपः लूनशीर्षकमलः तव

---

१ BC °पुसुणो THOUGH THEY HAVE °पुसणो IN THE COMMENTARY. २ B सु-
समु° WE WITH C

---

1 B° सुचार्थो° C° सुवार्तो°

नय-पडि-अग्गिर, अणुवच्चिओ सि दाहिण-दिसाइ तुमम् इण्हिं
विढविअ-कुङ्कुण-सलङ्ग-संपओ, अज्जिअ-जसोह ! ७१
पहु-सिरि-नयर-सिरीए जुज्जसि, जुप्पसि तिलङ्ग-लच्छीए,
जुञ्जसि कञ्चि-सिरीए, भुञ्जन्तो दाहिणं इण्हिं. ७२
सिन्धु-वई तुह चमढण-वेल्लिओ, तुमह दिन्न-चड्डुणओ,
न जिमइ दिवसे, जेमइ निसाइ, पच्छिम-दिसाइ तह. ७३

अभग्नभटैः महासंग्रामविमर्देपि अपराङ्मुखैर्वीरैः कृतः विहितः ।
आपादित इत्यर्थः ॥

मूरिअ । अंबमइओ । सुडिअ । सूरिअ । विरिअ । मुसुमूरिअ । करञ्जिओ ।
पविरञ्जिअ । नीरञ्जिअ । अर्भञ्जिअ । " भञ्जेर्वेमय-मुसुमूर-मूर-सूर-सूड-विर-
पविरञ्ज- करञ्ज-नीरञ्जाः " [१०६.] ॥

७१. हे नयानुव्रजिन् नीत्यनुगमनशील अर्जीता आत्मसात्कृता
कुङ्कुणानां सराङ्कसंपत् स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलरूपलक्ष्मी-
र्येन स तथा । अत एव अर्जितयशओघ, असि त्वं दक्षिणदिशा
अनुव्रजितः अनुगतः । दक्षिणदिक्स्वामी संवृत्त इत्यर्थः ॥

पडिअग्गिर । अणुवच्चिओ[3] । " अनुव्रजेः पडिअग्गः " [१०७.] ॥

विढविअ । अज्जिअ । " अर्जेर्विढवः " [१०८.] ॥

७२. हे प्रभो कुमारपालनृप दक्षिणाम् अवाचीं दिशम् इदानीं
भुञ्जानः उपभोगयन् श्रीनगरश्रिया युनक्षि युक्तो वर्तसे । तिलङ्गल-
क्ष्म्या युनक्षि । काञ्चीश्रिया च युनक्षि । दक्षिणदिग्विजयात् तद्-
न्तवर्तिदेशस्वामी त्वम् आसीदीति भावः ॥

जुज्जसि । जुप्पसि । जुञ्जसि । " युजो जुञ्ज-जुज्ज-जुप्पाः " [१०९.] ॥

७३. तथा तव भोजनस्य वेला विद्यते यस्य स भोजनवेलावान् ।

१ B° वच्चिओ. WE WITH C.

1 SO B C. A HAS मुसमू° 2 SO B C AND NOT °व्रजितः, THOUGH B ONCE READ °व्रजित ।= °व्रजितः? 3 B OM THE EXAMPLE C °वच्चिओ WHICH WE FOLLOW. THE AUTHOR OF THE DHUNDHIKĀ ALSO HAS °वच्चइ, NOT °वज्जइ.

तम्बोलं न समाणइ, कम्मण-कालेवि नण्हए जवणो,
विसए अ नोवभुञ्जइ भएण तुह, वसुह, कम्मवण ! ७४
मणि-गढिअ-कणय-घडिआहरणे उब्बेसरो वर-तुरङ्गे
संगलिअ लक्ख-सङ्खे पेसइ तुह रिउ-असंघडिओ. ७५
हरिस-सुरिआणणो सो, महि-मण्डण, कासि-राइणो राया
टिविडिक्कइ तुह वारं हय-चिञ्चिअ-हत्थि-चिञ्चइअं. ७६

भवतो वेलाधर इत्यर्थः । त्वया दत्तभोजनः जीवत्त्वसौ वराक इत्यनुकम्पया वितीर्णग्राममात्रजनकदेशः पश्चिमदिशः सिन्धुपतिः प्रतीचीदीक्संबन्धिस्वामी दिवसे न भुङ्क्ते निशायां भुङ्क्ते । स्वाम्यसाक्षात्कारे वेलाधरा रात्रौ भुञ्जत इति स्थितिः ॥

७४. हे वसुधोपभोजक पृथ्वीपालक तव भयेन हेतुना जैवनः जैवनदेशाधीशः ताम्बुलं न भुङ्क्ते । भोजनकालेपि न भुङ्क्ते । विषयांश्च शब्दादीन् देशान् वा नोपभुङ्क्ते । सर्वं ताम्बुलास्वादनादि मुक्त्वा केवलं त्वशदाधनोपायान् अधीत इत्यर्थः ॥

भुञ्जन्तो । चमढण । चड्डुणओ । जिमइ । समाणइ । कम्मण ।
अण्हए । " भुजो भुञ्ज-जिम-जेम-कम्माण्ह-समाण-चमढ-चड्डाः " [११०.] ॥

उवभुञ्जइ । कम्मवण । " वोपेन कम्मवः " [१११] ॥

७५. रिपुभिः असंघटितैः भवद्विपक्षभूयभूतः सन् उच्चैःश्वरः मणिघटितकनकघटिताभरणानि संघटय्य मेलयित्वा लक्षसंख्यान् । प्रभूतान् इत्यर्थः । वरतुरंगमाश्वं तव प्रेषयति अर्चयि(?)क्षितव्य् उपढौकयति ॥

गढिअ । घडिअ । " घटेर्गढः " [११२.] ॥

संगलिअ । असंघडिओ । " समो गलः " [११३.] ॥

७६. हे महिमण्डन धरित्रीभूषक हर्षेण प्रसन्नो मयि महाराज

1C उब्बेसरो. WE WITH B. 2 C° वि°

1 B om. °कु° 2 B om. FROM भुङ्क्ते UP TO रात्री BOTH INCLUSIVE. 3 BC साम्य° 4 C° त्कारे वेला° 5 SO BC. 6 BC केवलत्व° 7 C° विपक्षे. 8 C उच्चैःश्वरः. WE WITH B. 9 B °घटित.° WE WITH C.

चिञ्चिल्लिओ अखुडिअ-भत्तीइ तुमम्मि मगह-देस-निवो
उम्मुडिअ-पुव्व-गव्वो अतुडिअं पाहुडं देइ. ७७

अक्खुडिअ-गमणम्, अल्लोडिअ-मद्म्, अतुडिअ-लक्खणमहेभ-कुलं
अणिलुक्कन्त-सिणेहो गउडो पेसीअ तुज्झ कए. ७८

लुक्किअ-जसम् उल्लुरिअ-पयावम् उल्लुक्किअ-महिणिं काही
घोलन्ती तुह सेणा भय-खुलिअं कमउज्जेसं. ७९

इति प्रमोदेन स्फुटिताननः विकसितमुखः काशीमण्डनः शोभाजनकः । वाराणसीस्वामीत्यर्थः । स सर्वथा सिद्धः तव हर्षमण्डितं शोभितं सत्वरा सम्यक् नद्धुलितमण्डितं च तत्त्वाभूतं द्वारं मण्डयति । मध्यम् आविशन् प्रत्यहं दौवारिकेण निषिद्धः प्रायः सिंहद्वारमेव अलंकरोतीत्यर्थः ॥

मुरिअ । "हासेन स्फुटेर्मुरः" [११४.] ॥

७७. त्वयि अत्रुटितभक्त्या अखण्डितबहुमानेन मण्डितो भूषितः त्रुटितपूर्वगर्वः गलितप्राच्याभिमानो मगधदेशनृपः अत्रुटितं निरन्तरं प्राभृतं रत्नादिढौकनं ददाति तुभ्यं प्रयच्छति ॥

मण्डुण । रीडणो । टिविडिक्कइ । चिञ्चिअ । चिञ्चइअं । चिञ्चिल्लिओ ।

"मण्डेश्चिञ्च-चिञ्चअ-चिञ्चिल्ल-रीड-टिविडिक्काः" [११५.] ॥

७८. अत्रुटितस्नेहः अनपगतप्रीतिः गौडः गौडदेशाधिपतिस्तव कृते अत्रुटितगमनम् अखण्डितपादन्यासम् अत्रुटितमदं निरन्तरानिवृत्तदानप्रवाहम् अत्रुटितलक्षणं संपूर्णलक्षणोपेतं महेभकुलं प्रैषीत् प्राहिणोत् ॥

७९. हे नृप तव सेना घूर्णमाना चलन्ती सती त्रुटितयशसं विगलितकीर्तिं त्रुटितप्रतापं गततेजसं त्रुटितमेदिनीकं भ्रष्टावनिम् ।

तुज्झ पहल्लिर-सिविरे, घुम्माविअ-दंसमाण-कुम्मम्मि,
दिट्ठे वि, दसण्ण-वई विवट्टमाणो भए मरही. ९०.
अण कढिअ-दुद्ध-सुइ-जस, पयाव-घुम्मट्टिआरि-जस-कुसुम,
तुह गण्ठिअ-वूहेणं विरोलिओ तस्स पुर-जलही. ९१
बाहुलकात् अत्र कप्रत्ययाभावः। भयघूर्णितं साध्वसचकितं कन्यकुब्जे-
शम् अकार्षीत् ॥

अखुट्टिअ । उक्खुडिअ । अतुट्टिअं । अक्खुडिअ । अतोडिअ । अतुडिअ ।
अणिलुक्कन्त । लुक्किअ । उल्लुरिअ । पल्लुकिअ । " तुडेस्तोड-तुट्ट-खुट्ट-खुडोक्खुडो-
ल्लुक-णिलुक्क-लुक्कोल्लुराः " [११६]॥

९०. हे क्षुपते तव घूर्णितश्चलितो विवर्तमानः धराधारित्वन्
कूर्मो येन स तथा तस्मिन् घूर्णयितृ विचरणशीलं यच्छिबिरं स्क-
न्धावारस्तस्मिन् दृष्टेपि । आस्तां क्षुभ्यमाने । दशार्णपतिः भये वि-
वर्तमानः सन् अम्रियत प्राणान् अमुचत् ॥

घोलन्तो । घुलिअं । पहल्लिरं । घुम्माविअं । " घुणो घुल-घोल-घुम्म-पहल्लाः "
[११७]॥

दंसमाण । विवट्टमाणो । " विवृतेर्दंसः " [११८]॥

९१. हे अक्वथितदुग्धशुचियशः अथनावर्तितक्षीरनिर्मलकीर्ते
प्रताप घर्मकथितारियशः कुसुम तेजस्तापम्लापितरिपुकीर्तिपुष्प तव
ग्रथितव्यूहेन दृब्धेन सेनानिवेशेन कर्त्रा तस्य दशार्णपतेः पुरमेव
अतिविस्तीर्णत्वात् जलधिः मथितः रत्नाश्वगजादिलिप्सया विलो-
डितः । तन्नगरं विलुण्ठितम् इत्यर्थः ॥

अणकढिअ । अट्टिअ । " क्वथेरट्टः " [११९]॥

गण्ठिअ । " ग्रन्थो गण्ठः " [१२०]॥

मन्थिअ-दहिणो तुप्पव घुसलिआ तस्स नयरओ कणयं-
गिण्हन्तेहिं तुह सेणिएहिं अवअच्छिआ अम्ह. ९२
तस्स चमूवा समरे णुमज्जिआ तुह भडेहि णिव्वरिआ
णिज्झोडणेहि णिल्लूरणाहि अणलूरिअ-पयावा. ९३
छिन्दिअ-छत्त-दुहाविअ-सिरक्क-णिच्छल्लि-उत्तमङ्गाण
उद्दालिआ दसण्णाण सिरी चालुक्क-सुहडेहिं. ९४

९२. हे धराधीश मथितदध्नः तुप्प इति देश्यत्वात् नवनीतं त-
दिव तस्य दशार्णपतेः मथितात् नगरात् कनकं तव सैनिकैस्तैः उ-
त्सिक्तैर्गृह्णद्भिः आदरा नेवयं ह्लादिता हर्षिताः॥

विरोलिओ। मन्थिअ। घुसलिआ। "मन्थेर्घुसल-विरोलौ" [१२१.]॥
अवअच्छिआ। "ह्लादेरवअच्छः" [१२२.]॥

९३. हे महाराज तस्य दशार्णपतेः छेदनदारणैः अतिभटानां वि-
दारकाः अत एव अच्छिन्नप्रतापा अखण्डिततेजसोपि चमूपाः से-
निकास्तव छेदनैविंदारकैर्भटैश्छिन्नाः सन्तः समरे निषण्णाः
स्थिताः। भूता भूत्यर्थः। ये छेदना अच्छिन्नप्रतापाश्च ते कथं छिन्ना
इति विरोधाभासः अपिशब्दार्थः॥

णुमज्जिआ। "नेः सदो मज्जः" [१२३.]॥

९४. छिन्नानि विदारितानि छत्राणि येषां ते च छिन्नाः शिरस्का
येषां ते च छिन्नानि उत्तमाङ्गानि येषां ते च तथा। तेषां दशार्णानां
दशार्णदेशक्षत्रियाणां श्रीः समाङ्संपत् चौलुक्यसुभटैः आच्छिन्ना
गृहीता॥

णिव्वरिआ। णिज्झोडणेहि। णिल्लूरणा। अणलूरिअ। छिन्दिअ। दुहाविअ।
णिच्छल्लिअ। "छिदेर्दुहाव-णिच्छल्ल-णिज्झोड-णिव्वर-णिल्लूर-लूराः" [१२४.]॥

---

१ C सिण्णिएहिं. २ B णिज्झोº C णिछोº ३ B C छंदिअº ४ B C ºसिरº

---

1 B C घुसलिअं. 2 B C अवअच्छइ.

उत्थङ्घिअ-वारेहिं रुन्धिअ-मग्गेहिं हक्कमाणेहिं
कुज्झन्तेहिं तुह सेणाएहिं जूरविआ रिउणो. ११

तुह जायन्त-पवेसे सिन्ने, जमन्त-परिहवो सत्तो,
तड्डिअ-भओ महुरेसो न तड्डवी आजि-संरम्भं. १२

तड्डिअ-कणय-चाणं विरल्लिअं थिपिऊण तुह सेन्ने
महुरेसो तणिअ-दिही रक्खीअ नीअं पुरिं महुरं. १३

कम् अविद्यमानद्रव्यम् आखन्नेभकुलम् अखिद्यमानचमूपं सैन्यं मथुरायां पासम्। सुखसुखेन तत् तस्यां गतम् इत्यर्थः॥

णीहरिअ। अक्कन्दावणयं। "आक्रन्दे णीहरः"[1] [१३१.]॥

अखिज्जमाणं। अजूरिए। अविसूरन्त। "खिदेर्जूर-विसूरौ" [१३२.]॥

११. हे नरेन्द्र तव रुद्धद्वारैः वेष्टितपत्तोल्यादिनगरद्वारैः अत एव रुद्धमार्गैः निषिद्धवर्त्मभिः। निवारितलोकप्रचारैरित्यर्थः। निषेधद्भिः प्रतिभटान् निवारयद्भिः क्रुध्यद्भिः सकोपैः सैन्यैः रिपवः क्रोधिताः क्रोधं प्रापिताः॥

उत्थङ्घिअ। रुन्धिअ। "रुधेरुत्थङ्घः"[3] [१३३.]॥

हक्कमाणेहिं। "निषेधेर्हक्कः" [१३४.]॥

कुज्झन्तेहिं। जूरविआँ[4]। "क्रुधेर्जूरः" [१३५.]॥

१२. हे महीपाल तव जायमानप्रवेशे सैन्ये सति ततः सैन्यात् जायमानपरिभवः अस्मत्सैनिकस्याद्य उत्पद्यमानतीरस्कारः। अत एव ततभयः प्रभूतसाध्वसः मथुरेशः[5] आजिसंरम्भं समरारोपं नातनिष्ट न चकार॥

जायन्त। जमन्त। "जनो जा-जम्मौ" [१३६.]॥

१३. तर्हि किं चकारेत्याह। हे नरेन्द्र ततकनकचयेन कृत्वा

---

1 B आक्रंदेणीहरः. 2 B om. this example. C अविज्जमाण. 3 So B C and A. 4 B C जूरविआ. 5 B मधु॰

सग्गल्लिअन्त-जस-भर, जङ्गल-वइणो वसप्पिउं दिण्णा
तुह रिउ-झड्डावण-घण-पयाव-संतप्पिएण गया. १४
जस-ओअग्गिअ-ति-हुअण, तेण कया भत्ति-वाविअ-मणेण
असमाणिअ-गुण, वइरं समाविउं तुज्झ विन्नत्ती. १५

ततं[1] तव सैन्यं तृप्ता संतोष्य मधुरे[2]रास्तन[3]धृतिः विहितचित्तसौख्यः सन् निजां पुरीं मथुराम् अरक्षत् ॥

तड्डिअ । तड्डवीअ । तड्डिअ । विरल्लिअं । तणिअ । "तनेस्तड-तड्ड-तड्डव-विरल्लाः" [१३७]॥

थिप्पिऊण । "तृपः थिप्पः" [१३८]॥

१४. हे स्वर्गोपसर्पद्यशोभर त्रिदिवोल्लसत्कीर्तिनिकर उपसर्पितुं त्वाम् आश्रयितुं जङ्गलपतिना सपादलक्षाधिपेन रिपूणां संतापको यो घनप्रतापः आज्ञा त्वदाज्ञानङ्गीकारेण विरोधके[4] यत् तेजस्तेन संतप्तेन सता तव गजा दत्ताः ॥

अल्लिअन्त । उवसप्पिउं । "उपसर्पेरल्लिअः" [१३९]॥

अड्डावण । संतप्पिएण । "संतपेर्झङ्खः[5]" [१४०]॥

१५. हे यशोव्याप्तत्रिभुवन असमाप्ताः अनिष्ठिताः। असंख्याता इत्यर्थः। गुणा यस्य स तथा तस्य संबोधनम् । तव वैरं समाप्य त्वदाज्ञानङ्गीकारेण विरोधं निष्ठां नीत्वा वैरं समाप्तुं निष्ठां नेतुं वा भक्तिव्याप्तमनसा तेन जङ्गलपतिना विज्ञप्तिः कृता ॥

ओअग्गिअ । वाविअ । "व्यापेरोअग्गः" [१४१]॥

असमाणिअ । समविउं[6] । "समापेः समाणः" [१४२]॥

---

1 BC तं FOR ततं. 2 B मधु° 3 BC om. °न° 4 BC विरोधं. 5 So EMENDED FROM संतपे झंखः OF B, AND संतपे डंख: OF C. A संतापेर्झंखः. SEE PISCHEL FOOT-NOTE AD LOC. SEE ALSO SUTRA IV. 150 INFRA. 6 B °उं. C °ओ.

सइ पिल्लिओ तुरुक्को, दिल्ली-नाहो गलत्थीओ तइ य,
अट्टुक्खिवओ अ कासी, रिउ-घत्तण, छुहइ महाणसं. ९६

सोल्लिज्जइ जइ लुद्धो तइ मं णोल्लेसु रिउ-हुलैन-कज्जे
कं कं परीसि न तुमं? किणावि खिविआ न तुज्झाणा. ९७

गुलैगुच्छिऊण हत्थं, उत्थङ्घिअ तज्जणिं भणामि इमं,
हक्खुविअं तुमाछिअ मइ दुग्गं वेरि-उक्खिवण! ९८

९६. एकादशाभिर्गाथाभिर्विज्ञप्तिकामेवाह। हे रिपुक्षेपण वैरि-
निरासक त्वया तुरुक्को म्लेच्छाधिपतिः क्षिप्तः। तथा दिल्ली-
नाथः योगिनीपुरेश्वरश्च क्षिप्तः। काशिः वाराणसीशश्च क्षिप्तः। य-
श्चित् आत्ममानि नृपः स सर्वस्वग्रा निरस्कृत इत्यर्थः। मम
कुलपतेरारेझं क्षिप विसृज। मम निरोपं ददस्वेत्यर्थः॥

९७. हे क्षोणीपते यथा लुब्धः स्वसेवकः क्षिप्यते सर्वस्मिन् क-
नियुज्यते तथा रिपुक्षेपणकार्ये स्वशत्रुतिरस्कारप्रयोजने मां क्षिप
नियुङ्क्ष्व। तथा कं कं त्वं न क्षिपसि। अपि तु सर्वमपि शत्रुवर्गं
नीरस्यसि। अत एव केनापि तवाज्ञा न क्षिप्ता। सर्वोऽपि त्वन्नि-
देशपरः संवृत्त इत्यर्थः॥

पेल्लिओ। गलत्थिओ। अड्डुक्खिवओ। घत्तण। छुहइ। सोल्लिज्जइ।
णोल्लेसु। हुलण। परीसि। खिविआ। "क्षिपेर्गलत्थाड्डुक्खसोल्लपेल्लणोल्ल-
छुह-हुल-परी-घत्ताः" [१४३]॥

९८. हे वैर्युत्क्षेपण अरातिनिरासक त्वयैव मम दुर्गं कोट्टः उ-
त्क्षिप्तम् उत्सारितम्। नान्योऽस्य संमुखमपि निरीक्षितुं क्षम इत्यर्थः।
इदम् एतत् हस्तम् उत्क्षिप्य ऊर्ध्वीकृत्य तर्जनीं प्रदेशिनीं अङ्गुलीं च उ-
त्क्षिप्य, भणामि सकलभूपालमण्डलीप्रत्यक्षं प्रतिपादयामि॥

---

१ B डि॰ २ B ॰लुणु॰ ३ B गुलु॰

---

ISoBC.

अल्लत्थिअ-विजय-धया उब्भुत्तिअ-गुरु-करा तुहं करिणो
उस्सिक्कन्ति गिरिंपि हु, रिउ-णीरव, कं न अक्खिवसि ? ९९
कमवसइ जुण्ण-कोलो, लोट्टइ सेसो, सुअन्ति दिक्करिणो,
कुम्मोवि लिसइ, अणवेविरम्मि तइ पहु महीधरणे. १००
आयम्बमाण-हिअया आअज्झन्तोउ विलविरा रण्णे
उद्धुन्त-सिसू तुह रिउ-वहूउ दइआ वडवडन्ति. १०१

९९. रिपून् आक्षिपति तिरस्करोति । "कर्मणोऽण्" [है० ५.१] इत्यणि रिप्वाक्षेपस्तत्संबोधनम् । तव उत्क्षिप्तविजयध्वजाः ऊर्ध्वीकृतविजयवैजयन्तीकाः । उत्क्षिप्तगुरुकराः उत्क्षालितबृहच्छुण्डादण्डाः करिणः । हु इति संभावयामि । गिरिमपि उत्क्षिपन्ति उत्सारयन्ति । अतस्त्वं कं नाक्षिपसि । यस्य तव एवंविधा दन्तिनः स त्वं सर्वमपि विजयस इत्यर्थः ॥

गुलुगुञ्छिऊण । उत्थङ्घिअ । हक्खुविअं । उक्खिवण । अल्लत्थिअ । उब्भुत्तिअ । उस्सिक्कन्ति । "उत्क्षिपेर्गुलगुञ्छोत्थङ्घाल्लत्थोब्भुत्तोस्सिक्क-हक्खुवाः" [१४४.]॥

णीरव । अक्खिवसि । "अक्षिपेर्णीरवः" [१४५.]॥

१००. हे प्रभो अवेपितरि अकम्प्रे निश्चले महीधरणे पृथ्वीप्राग्भारधारके त्वयि सति जीर्णकोलः आद्यवराहः स्वपिति । शेषः फणिपतिः स्वपिति । दिक्करिणो दिग्गजाः स्वपन्ति । कूर्मः कमठः स्वपिति । एतत्कार्यस्य भवता करणाद् एते निश्चिन्ताः संवृत्ता इत्यर्थः ॥

कमवसइ । लोट्टइ । सुअन्ति । लिसइ । "स्वपेः कमवस-लिस-लोट्टाः" [१४६.]॥

१०१. हे नरेन्द्र तव वेपमानहृदयाः साध्वसवशात् कम्पमान-

---

१ B C अब्भु° २ B णीवर. ३ B लसइ. ४ B °म्ब° ५ B C आयम्भ°

---

1 B गुहु° 2 B C अब्भु°

मय-लिम्पिअ-वसुहा तुह न णडन्ति गया, विरन्ति न य तुरया;
अणगुप्पन्त-परक्कम, अवहावसु, को तुह दुइज्जो? १०२
सन्दुमइ घरं, सन्धुक्कइ पुरम्, अब्भुत्तइ तहोज्जाणं,
तुज्झ पयावग्गि-पलीविआण सव्वंपि तेअविअं. १०३

मानसाः। वेपमानाः कायेऽपि वेपथुभृतः। विलपित्र्यो विलपनशीलाः। विलपच्छिशवो रुदद्बालका रिपुवध्वः अरण्ये दयिते विलपन्ति। हा नाथ युष्मान् विना कथं वयं प्राणान् धरिष्याम् इति दयितवि-षयान् विलापान् कुर्वन्तीत्यर्थः॥

अणवेविरम्मि। आयम्ब[1]माण। आयज्झ[2]न्तीउ। "वेपेरा[3]यम्बायज्झौ" [१४७.]॥

विलविरा। झङ्ख[4]न्त। वडवडन्ति। "विलपेर्झङ्ख[5]-वडवडौ" [१४८.]॥

१०२. हे अगुप्यत्पराक्रम स्थिरशौण्डीर्य[6] तव मदलिप्तवसुधाः दानसिक्तभूमयो गजा न गुप्यन्ति प्रधानत्वाद् रणसंमर्देऽपि न व्याकुली भवन्ति। तुरगाश्च न गुप्यन्ति अतः कृपस्व। मयि प्रसीदेत्यर्थः। यस्मात् कस्तव द्वितीयः। न कश्चित् तव प्रतिपक्षभूतोऽस्तीति भावः॥

लिम्पिअ। "लिपो लिम्पः" [१४९.]॥

णडन्ति। विरन्ति। अणगुप्पन्त। "गुपेर्विर-णडौ" [१५०.]॥

अवहावसु। "कृपोऽवहो णिः" [१५१.]॥

१०३. हे महीश तव प्रतापाग्निना प्रदीप्तानां प्रज्वलितानां गृहं प्रदीप्यते तथा पुरं प्रदीप्यते तथा उद्यानं प्रदीप्यते। किं बहुना। सर्वमपि प्रदीप्तम्। सौ[7]ख्यहेतूनां चन्दनविलेपनचन्द्रिकाद्यपि संतापहेतुः संवृत्तम् इत्यर्थः॥

---

1 B आयम्ब॰ 2 C आयज्झन्तीउ. WE with B 3 B° [illegible]. C °[illegible]. 4 C डंखन्त 5 C °डंखव॰ 6 B °शोडीर्य. 7 B [illegible]

जइ संभावसि मग्गे, लुब्भसि अह वा अहिन्द-लोगम्मि,
खउरइ इन्दो, पड्डुहइ वासुगी ता खु अक्खोहः १०४
आरभिअं माए भत्तिं आढविअं पहु तुमम्मि दासत्तं.
आरम्भिअं खु निव्वाहिस्सं; कत्तो उवालम्भो? १०५
पच्चारन्ति न गरुआ झड्डण-जोग्गेवि मारिसम्मि जणे.
जइ कहवि अभत्तो हं वेलवणिज्जो तुह अहं तो. १०६

संलुभइ । सम्बुक्कइ । अब्भुतए । पलीविआण । सेलविअं । "प्रदी-पेस्तेअव-सन्तुम-संधुक्काब्भुत्ताः" [१५२.]॥

१०४. हे अक्षोभ निःप्रकम्प यदि त्वं स्वर्गे स्वर्गनिमित्तं लुभ्यसि गार्ध्यं करोषि । अथवा अहीन्द्रलोके नागलोकनिमित्तं लुभ्यसि तदा । खु इति संभावयामि । इन्द्रः क्षुभ्यति । वासुकिः शेषः क्षुभ्यति । किमयम् अत्रापि न स्थातुं दास्यतीत्यभावतो क्षोभं वहतीत्यर्थः ॥

संभावसि । लुब्भसि । "लुभेः संभावः" [१५३.]॥

खउरइ । पड्डुहइ । अखोहः । "क्षुभेः खउर-पड्डुहौ" [१५४.]॥

१०५. हे प्रभो भक्तिं सेवाम् आरभ्य त्वयि दासत्वम् आरब्धम् । ननु आरब्धमपि न निर्वाहयिष्यसीत्याह । आरब्धम् अङ्गीकृतं च दासत्वम् । खु इति निश्चितम् । निर्वाहयिष्यामि । ततः कुत उपालम्भः । न कथमपि एवं मम वचनीयता भविष्यतीति भावः ॥

आरभिअ । आढविअं । आरम्भिअं । "आङो रभे रम्भ-ढवौ" [१५५.]॥

१०६. किंच हे नराधिप गुरुका युष्मत्सदृशा महीयांसः उपाल-

---

१८ तो

---

। ४ न । स्याः C न स्याः 2 C om न.

इअ विन्नत्तिं सोउं राया जम्भायन्त-जणम्मि निसीहे
रुच्छि-विअम्भिअ-णिसुढिर-सयणे णिव्वाओ लोअण-वीसामे[3]।

भयेष्वपि निर्भर्त्सनार्हेऽपि माहृशो जने नोपालम्भन्ते न विरूपकं प्रति-पादयन्ति । परं यद्यहं तव कथमपि अभक्तः अवज्ञापरस्तदा उ-पालम्भनीयः शिक्षणीयः ॥

उवालम्भो । पच्चारन्ति । झङ्कूण । वेलवणिज्जो । "उपालम्भेर्झङ्ख-पच्चार-वेलवाः[3]" [१५६.] ॥

२०७. इति पूर्वोक्तप्रकारेण विज्ञप्तिं सान्धिविग्रहिकोक्तविज्ञापनं श्रुत्वा निशम्य जृम्भमाणः[4] निद्रातुकामत्वात्[5] जृम्भां गृह्णन् जनो यत्र तस्मिन् निशीथे अर्धरात्रे लक्ष्म्या विजृम्भिते यत्र तत्तथा । महाधर्मे[6] इत्यर्थः । तस्य तथाभूते च निम्नमध्ये शयने शय्या तस्मिन् राजा कुमारपालभूपो लोचनयोर्विश्रामे स्वेदापनोदनिमित्ते विश्रान्तः । सु-ष्वापेत्यर्थः । धारा कुलकं छन्दः ॥

जम्भायन्त । "अवेर्जृम्भो जम्भा" [१५७.]॥ अवेरिति किम् । विअम्भिअ ।

णिसुढिर । "भाराक्रान्ते नमेर्णिसुढः" [१५८.]॥

णिव्वाओ । वीसामे । "विश्रमेर्णिव्वा" [१५९.]॥

इत्याचार्यश्रीहेमचन्द्रविरचितश्रीकुमारपालचरितप्राकृतद्व्याश्रय-महाकाव्यवृत्तौ षष्ठः सर्गः समाप्तः ॥

---

१ C °म्भि. २ C °विअंभणिअ° ३ BC °वीसामो.

1 BC °ल° 2 BC शिष्यः 3 BC °वेलवा. 4 C °मानो. 5 C निद्रानु-कामित्वाद्. 6 C °र्थे°

ओहाविअ-सयल-बलो, उत्थारिअ-अन्तरङ्ग-रिउ-वग्गो,
खुन्दिअ-करणो राया निद्दन्ते चिन्तम् इअ काही. १

अक्कमिआ विसएहिं, छिरिछिल्ला पुरन्धि-सेवाए,
हा दुण्ढुल्लन्ति भवे चक्कम्मिआ कुकम्मेहिं. २

१ अथ प्रबोधकाले परमश्रावकसमुचितां स्थविरलब्धासक्तगुण-दोष स्त्रीजुगुप्सास्थूलभद्रादिमहर्षि जिनवचनचतुष्कानुष्ठाननिरन्तरप्रशं-साप्रभृति सूरिस्तवश्रुतदेवताप्रभावव्यावर्णनरूपां चिन्तामेव चतुर-शीत्या गाथाभिराह । आक्रान्तानि स्वबलेन पराभूतानि सकलबलानि समस्तप्रत्यर्थिपार्थिवसैन्यानि येन स तथा । आक्रान्तान्तरङ्ग-रिपु-वर्गः विजितमदमानमनोभवसंमरक्रोधलोभरूपान्तरारातिसमुहः । आक्रान्तकरणः वशीकृतेन्द्रियो राजा कुमारपालभूपो निद्रान्ते स्वा-पविरामे इति वक्ष्यमाणां चिन्ताम् अकार्षीत् ॥

२ कथं कथं चिन्ताम् अकरोद् इत्याह । विषयैः शब्दरूपरसगन्ध-स्पर्शैराक्रान्ताः वशीकृताः पुरंध्रीसेवया सीमन्तिनीसंभोगेन हे-तुना भ्राम्यन्तः पर्यटन्तः कुकर्मभिः ज्ञानावरणीयादिभिर्भ्रमिताः भ्रमं प्रापिता जीवाः । हीति खेदे । भवे चातुर्गतिकसंसारे भ्रमन्ति विचरन्ति ॥

ओहाविअ । उत्थारिअ । खुन्दिअ । अक्कमिआ । "आक्रमेरोहावोत्थार-च्छुन्दाः"[2] [१६०] ॥

---

१ B C छिरिछि° २ C °तिरिल्ला.

---

1 B C छुन्दिअ. 2 B C च्छुंदाः OR °च्छंदाः. WE WITH A.

काम-गह-भमडिराहिं भमाडिओ भम्मडेड़ को न भवे?
गय-काम-झण्टणो पुण तलअण्टइ सिद्ध-भूमीसु. ३
ढण्ढल्लिअ-भुमयं भुमिअ-धणू, जग-झम्पणो-गुमिअ-आणो,
जंन कुमायइ मयणो अकुमिअ-बुध्दी खु सो धन्नो. ४
टुंमइ पुरे, टुसइ वणे, परइ थलीसु, परीइ जल-मज्झे,
अभमिअ-चित्तो ईत्थीहि पीइ धन्नो पसम-रज्जं. ५

३. कामग्रहेण भ्रान्तैः भ्रान्तिम् आरोपितः कूटपरादिदर्शनैः कृत्वा भ्रान्तः मोहम् उपगतः को भवे न भ्राम्यति अपि तु तादृशः प्राणी सर्वोपि संसारे भ्रमतीत्यर्थः। गतं कामभ्रमणं मन्मथमोहो यस्य स तथाविधः पुनः सिद्धभूमिषु सिद्धक्षेत्रेषु भ्रमति गच्छति॥

४. भ्रान्तभ्रु चलितनेत्रोर्ध्वरोमपद्धति यथा भवति एवं भ्रमितं विश्ववशीकरणाय चलितं धनुर्येन स तथा। अत एव जगद्भ्रमणः भुवनभ्रान्तिकारको भ्रमिताज्ञश्च सर्वत्र विलसितशासनो मदनो यं कमपि पुरुषं न भ्रमयति न चालयति सः अभ्रमितबुद्धिः निश्चल-मतिः खु निश्चितं धन्यः प्रशस्यः॥

५. स्त्रीभिरभ्रान्तचित्तः असुभ्रमनाः सन् पुरे भ्राम्यति वने भ्राम्यति स्थलीषु भ्राम्यति जलमध्ये च भ्राम्यति। शीलप्रभावाद् न क्वापि देवतादिकृतं स्खलितं संपद्यत इत्यर्थः। किं बहुना। सकलानर्थ-हेतुस्त्रीव्यापृतमनस्त्वाद् वने परमपदं लब्ध्वा धन्यः प्रशमराज्यं गच्छति। निरूपमसुखहेतुपशमैकतानः संपद्यत इति भावः॥

टिरिटिल्लन्त। ढुण्ढुल्लन्ति। चक्कम्मविआ। भमडिराहिं। भमाडिओ। भम्मडेइ। झण्टणो। तलअण्टइ। ढण्ढल्लिअ। भुमिअ। झम्पणो। गुमिअ। कुमायइ।

---

१ B तण॰ C तणअंतइ. २ B टु॰ ३ C अच्छीहि.

---

1 B om. स्थलीषु भ्राम्यति.

मोच्चिअ सोक्खम् अइच्छइ, परमं उक्कसइ, अक्कसइ सग्गं,
मोक्खंपि हु अणुवज्जइ, अईइ न हु जो जुवइ-सङ्गं. ६
तारुण्णे णिम्महिए, अवज्जमन्तेसु हाणिम् अक्खेसु,
ही पच्चड्डइ वुड्ढोवि न पसमं काम-पच्छन्दो. ७
णीणन्ति मित्त-भज्जं, रम्भन्ति सुअं, वहुंपि पडअन्ति,
णीलुक्कन्ति च गुरु-गेहिणिंपि काम-वस-परिअल्लिआ. ८

अक्कुसिअ। हुमइ। दुमइ। परइ। परीइ। अभमिअ। "अमेंटिरिटिल्ल-दुण्डुल्ल-ढण्ढल्ल-चक्कम्म-भम्मड-भमड-भमाड-तलअण्ट-झण्ट-झम्प-भुम-गुम-फुम-फुस-ढुम-ढुस-परी-पराः" [१६१.]॥

६. हु इति निश्चितं यो युवतिसङ्गं न गच्छति। रमणीं न सेवत इत्यर्थः। स एव सौख्यं गच्छति। उत्रासं गच्छती। स्वर्गं गच्छति। किं बहुना। मोक्षं चिदानन्दरूपपरमपदमपि गच्छति॥

७. तारुण्ये यौवने गते गलिते सती अक्षेषु इन्द्रियेषु च हानिं ह्रासं गच्छत्सु प्राप्नुवत्सु सत्सु। हीति खेदे। वृद्धोपि जराजर्जरित-तनुः पुरुषोपि कामं विषयाभिलाषं गच्छति याति इत्येवंशीलः कामगामी सन् न उपशमं गच्छती। तादृशोपि कामविह्वलो न पौत्र हितम् आचरतीत्यर्थः॥

८. कामवशागताः मन्मथपारतन्त्र्यभाजः मित्रभार्यां गच्छन्ति। सुतां स्वपुत्रिकां गच्छन्ति। वधूं स्नुषामपि गच्छन्ति। किं बहुना। गुरोः पितृकल्पस्यात्मोपाध्यायस्य गेहिनीं कलत्रमपि गच्छन्ति च। लोकधर्मविरुद्धं तस्यास्तस्याः सीमान्तिन्याः सेवनं कुर्वन्तीत्यर्थः॥

---

१ B C मग्गं. २ B सोक्खं. WE WITH C.

---

1 B हु°. 2 B डुसइ. 3 B °चक्कम्मभम्मडतलअंट° OMITTING भमड AND भमाड. C °चक्कमभम्मड भमाडतलअंट° OMITTING भमड. WE WITH A. 4 C परहितं FOR पात्र हित. 5 B तस्याः FOR तस्यास्तस्याः.

महिलाण वसे परिअल्लिऊण बोल्लन्त-हरिअम् इह पावा
अवसेहन्ति सिरिच्छीउँवि अवहरिउज्जल-विवेआ. ९
जे णिरिणासीअ-मेरा वम्मह-वस-गा समं न णिवहन्ति,
अहिपच्चुइआ नूणं ते मुहिआ कम्म-भूमिम्मि. १०
महिलाण पेम्म-संगयम् आगच्छन्तीण जो न अब्भिडइ
उम्मत्थइ नाण-सिरी तस्स आगच्छइ विवेओ. ११

९. महिलानां वशो गत्वा । तत्परत्वं स्त्रीमुपेत्यर्थः । गच्छन्ति के
अइयाहणे यथा भवति एवं गतोज्ज्वलविवेकाः नष्टविज्ञातकृत्याकृ-
त्यविचाराः । अत एव पापाः कुत्सितकर्माचरणात् अधर्मिणः इह
जगति तिरश्चीः गोगर्दभ्यादिका अपि । आस्ताम् उभयलोकविरुद्धा
मानुषीः । गच्छन्ति कामयन्ते ॥

१०. गतमेराः नष्टमर्यादा मन्मथवशगाः स्त्रीसंभोगपरा ये शमं
रागाद्यभावं न गच्छन्ति कर्मभूमौ आर्यक्षेत्रे नूनं निःसंदेहं ते मुधा
आर्यक्षेत्रस्यैकसाध्यस्य शमस्य असाधनान्निरर्थकम् आगता उ-
त्पन्नाः ॥

णीइ । अइच्छइ । उक्कसइ । अक्कसइ । अणुवज्जइ । अइहि । णिम्मिहिा[2] ।
अवज्जसन्तेसु । पच्चुहुइ । पच्चन्दी । णीणन्ति । रम्भन्ति । पदअन्ति ।
णीलुक्कन्ति । परिअलिआ । परिअल्लिऊण । बोल्लन्त । अवसेहन्ति । अवहरिउँ ।
णिरिनासिअ । णिवहन्ति । "गमेरइ-अइ-च्छाणुवज्जावज्जसोक्कुसाक्कुस-पच्चड्ड-
पच्छन्द-णिम्मह-णी-णीण-णीलुक्क-पदअ-रम्भ-परिअल्ल-वोल्ल-परिअल-णिरिणास-
णिवहावसेहावहराः" [१६२.] ॥

११. प्रेम्णा संगतं सप्रेम यथा भवति एवम् आगच्छन्तीनां स्त्री-

---

१ C° ओरि. २ B° विवेय. ३ B° पच्चुइआ.

१ C° आर्या° २ B णिम्महिए. ३ C° ओ. ४ B° वज्जसोक्कुसाक्कुस C° वज्जसो-क्कुसाक्कुस° A° वज्जसोक्कुसपच्चड° OMITTING TWO LETTERS. IN THE TEXT AND THE EXAMPLES BOTH B AND C HAVE उक्कसइ AND अक्कसइ.

न भवे पच्चागच्छइ अपलोट्टिअ-माणसो जुवइ-सङ्गे
पडिसाय-मणो परिसामिएहिं कहिओ उवसम-मग्गो. १२
सङ्घुडुण-कुसलाणं उआअच्छन्तीण केवि रमणीण
किल किंचिअ-माइअ-कोड्डुमिएहिं न खेड्डेन्ति. १३

ढौकमानानां महिलानां यो न संगच्छते न संयुक्तो भवति । महिलासु न रज्यतीत्यर्थः । तस्य ज्ञानश्रीः अभ्यागच्छति संमुखम् आढौकते । विवेकश्च अभ्यागच्छति । सकलसमीहितपरविज्ञानपेक्षापूर्वकारितापात्रम् असौ संजायत इत्यर्थः ॥

अहिपच्चुइआ । आगच्छन्तीण । "आङा अहिपच्चुअः" [१६३.] ॥

संगय । अब्भिडइ । "समा अब्भिडः" [१६४.] ॥

उम्मत्थइ । अब्भागच्छइ । "अभ्याङोम्मत्थः" [१६५.] ॥

१२. युवतिसङ्गे अप्रत्यागतमानसः प्रतिनिवृत्तचित्तः शान्तमनाः कषायानुपप्लुतस्वान्तः शान्तैः शमयुक्तैश्च कथितोपशममार्गः उपदिष्टोपशमवर्त्मा न भवे प्रत्यागच्छति । रागद्वेषाद्यनर्थहेतुभ्योऽभिव्यङ्ग निवृत्तत्वाज्जरामरणाक्लिष्टपरमपदम् आसादयतीत्यर्थः ॥

पच्चागच्छइ । अपलोट्टिअ । "प्रत्याङा पलोट्टः" [१६६.] ॥

पडिसाय । परिसामिएहिं । उवसम । "शमेः पडिसा-परिसामौ" [१६७.] ॥

१३. रमणकुशलानां सुरतक्रीडानिपुणानां रममाणानां भोगिभिः सह क्रीडन्तीनां रमणीनाम् "निर्विशेषं न सामान्यम्" इति रमिः क्रीडामात्रेऽपि क्रीडाविशेषक्रीडने वर्तते । अतो रतरतनैरिति । कोऽर्थः । किल किंचित् मोट्टायितकुट्टमितैः कृत्वा केऽपि नीरागाः केचन महा-

१ B C किलि° २ C कोड° WE WITH B. ३ B C रिक्खु°

1 B °प्रद° 2 So B C A. SEE PISCHEL. 3 B C किलि°

रममाणीओ रामा णीसरणिज्जं अवेल्लणिज्जं च ।
अग्घविअ-वम्महाओ को अग्घाडइ सिणेहेण ? १४
मायाइ उद्दुमाया, अहिरेमिअ-तुच्छयाइ अड्डुमिआ,
चवलत्त-पूरिआओ को तुवरइ दट्ठुम् इत्थीओ ? १५

स्माने न रमन्ते । नानाकामचेष्टाविशिष्टास्ता न सेवन्त इत्यर्थः । तत्र स्मितहसितरुदितभयरोषगर्वदुःखश्रमाभिलाषसंकरः किलिकिंचितम् । प्रियकथादौ तद्भावभावनोत्था चेष्टा मोट्टायितम् । अधरादिग्रहाद् दुःखेऽपि हर्षः कुट्टमितम् । संस्कृतैरेव किलिकिंचितादिशब्दैः किलिकिंचेत्यादिसिद्धौ रमेस्तदादेशविधानम् अनेकधा शब्दव्युत्पत्तिरिति न्यायप्रदर्शनार्थम् । प्राकृते रमणमात्रेऽपि च एते प्रयुज्यन्त इति ज्ञापनार्थं चेति ॥

१४. रमयन्तीति "भव्यनीयादयः" इति [है० ५.१] कर्तरि अनीये रमणीयं कमनीयरूपपुरुषम् अरमणीयं जराकुष्ठाद्यभिभूतपुरुषं च रममाणाः सेवमानाः पूर्णमन्मथाः आङ्गिकसात्त्विकविकारकरणविचक्षणत्वाद् अन्यूनमनसिजा रामाः कः स्नेहेन पूरयति । गम्यागम्यविचारविकलासु तासु न कोऽपि विचक्षणोऽनुरागम् आधत्त इति भावः ॥

सङ्खुड्डुण । उब्भावन्तीस । किलिकिंचिअ । मोट्टाइअ । कोट्टुमिएहिं । खेड्डुत्ति । रममाणिओ । णिसरणिज्जं । अवेल्लणिज्जं । "रमेः संखुड्ड-खेड्ड-उब्भाव-किलिकिंच-कोट्टुम-मोट्टाय-णीसर-वेल्लाः" [४.१६८] ॥

१५. मायया पूर्णभृताः । पूर्णतुच्छतया असम्यग्गाम्भीर्येण पूर्णाः । चपलत्वपूर्णाः अस्थैर्यव्याप्ताः स्त्रीर्द्रष्टुं कस्त्वरते । न कोऽपि विद्वान् सस्पृहम् अवलोकितुम् उत्सहत इत्यर्थः ॥

---

1 So B C. AND NOT अहिरे°

---

1 BC किलि° 2 BC कुट्टि° 3 C चेत्ति. 4 BC °कुष्टा° 5 B C °लि°
6 B कुड्डिम° C कुड्डुमि° (WITCH IS DOUBTLESS MISCOPIED FROM कुट्टुमि°)
7 B C A किलि° 8 So WE WITH BC AND A.

तुरन्ति, अतूरन्तेपि हु जअडायन्ति, तुरिअ-मयणाओ
अहह हलिद्दी-राया खिरन्त-पेम्माहिं अङ्गेहिं. १६
पच्चड्डमाण-सरीरा झरन्त-खालव्व पज्झरिअ-रमणा
धीरा अणिड्डुअन्तेवि णिच्छल्लावेइ हा महिला. १७

अग्घविअ । अग्घाडइ । उद्धुमाया । अंहिरेमीअ । अङ्गुमिया । पूरिआओ ।
" पूरेरग्घाडाग्घवोद्धुमाङ्गुमाहिरेमाः " [१६९.] ॥

१६. त्वरितमदनाः उल्लसितमनोभवा हरिद्रावद् रागो यासां तास्तथा । अस्थिरप्रेमानुबन्धाः । अहहेति खेदे । तादृश्योपि कष्टं क्षरत्स्वेदैः सात्त्विकविकारवशात् स्विन्नैरङ्गैः कृत्वा त्वरन्ते स्वयं भोगिसंभोगाय उत्सहन्ते । अत्वरमाणं संभोगानुद्यतं पुमांसं त्वरयन्ति तथाविधविलासकरणेन प्रेरयन्ति ॥

तुवरइ । जअडावन्ति । " त्वरस्तुवर-जअडौ " [१७०.] ॥

तूरन्ति । अतूरन्तं । " त्यादिशत्रोस्तूरः " [१७१.] ॥

तुरिअ । " तुरोऽत्यादौ " [१७२.] ॥

१७. क्षरच्छरीरा निर्गच्छत्स्वेदोदबिन्दुप्रवाहतनुः । क्षरन् वहद् यत् । खालेति देश्यः । अशुचिजलनिर्गमस्थानम् । तदिव क्षरितं रमणं स्मरकूपिका यस्याः सा तथा । महिला अक्षरतः अनार्द्रहृदयानपि धीरान् । हीति खेदे । क्षारयति । आर्द्रहृदयान् करोति । सत्त्वाच्चालयतीति यावत् ॥

खिरन्त । पच्चड्डमाण । झरन्त । पज्झरिअ । अणिच्छुअन्ते । णिच्छल्लावेइ । "क्षरः खिर-झर-पज्झर-पच्चड-णिच्चल-णिट्टुआः " [१७३.] ॥

---

१ C पच्चडः २ B °ड्डुः C °ट्टुः

---

1 SO B C AND NOT अहिरे° 2 C जोग्घ° WE WITH BA. 3 HERE BC AND A READ °हिं° ALL RIGHT. 4 BC संभोगानुद्यंतं. 5 BC °आ.

उच्छल्लिअ-परिफाडिअ-भेगोवम-रमणि-रमण-रमिराण
सत्ती विअलइ, थिप्पइ कन्ती, बुद्धी अ णिट्ठुहइ. १८
तस्स विसट्टउ हिअअं, गयडुत्तं दलउ बुद्धी-कोसल्लं,
जो लिहइ वलिअ-भत्तंव वम्फि-लालं रमणि-अहरं. १९

१८. पूर्वम् उच्छलितः परिवृतः पश्चात् परिस्फाटितः । विदारितोदरदेश इत्यर्थः । यो भेको मण्डूकस्तेन उपमा सादृश्यं यस्य तत् तथा । एवंविधं यद् रमणीरमणं तद्रन्तारो रमणशीलास्तेषाम् । सादृग्भगाङ्गसक्तानाम् इत्यर्थः । शक्तिर्बलं विगलति क्षरति । कान्तिर्विगलति बुद्धिश्च विगलति । उपलक्षणमात्रम् एतत् । अन्यदपि कम्पादि स्त्र्यादिसक्तानां संजायते । यद् उक्तम् ।

कम्पः स्वेदः श्रमो मूर्छा भ्रमिर्ग्लानिर्बलक्षयः ।
राजयक्ष्मादिरोगाश्च भवेयुर्मैथुनोत्थिताः ॥

उच्छल्लिअ । "उच्छल उच्छल्लः" [१७४] ॥

विअलइ । थिप्पइ । णिट्ठुहइ । "विगलेस् थिप्प-णिट्ठुहौ" [१७५] ॥

१९. वलितभक्तमिव वान्तभोजनमिव । वम्फिन्यः अधःपतनशीला लाला यत्र तत् तथाविधं रमण्यधरं सुन्दरीदशनच्छदं यो लेढि पिबति । तस्य पुरुषस्य शतकृत्वः शतवारान् हृदयं दलतु भेदम् आप्नोतु । बुद्धिकौशलं च दलतु । तथा विधाकार्यनिरतस्य चैतन्यपाण्डित्यादि विफलम् इत्यर्थः ॥

विसट्टउ । दलउ । वम्फि । वलिअ । "दलि-वल्योर्विसट्ट-वम्फौ" [१७६] ॥

---

१ B DOUBTFUL BETWEEN च्छ AND च्छ. C च्छ. २ B °ट्ठु° C °हु°

---

1 B C DOUBTFUL BETWEEN च्छ AND च्छ. 2 B DOUBTFUL BETWEEN च्छ AND च्छ. C च्छ. A DISTINCTLY उच्छल उच्छल्लः. 3 B °ट्ठु° C °टु° 4 B °ट्ठु° C °हु° A °ट्ठु° 5 B C शतं.

